म॰ श्रीगणेशायनमः हेभगवन्नेनेनव महिम्नः पारं परमन्यर्थमविदुषः पुंसः अजाननः पुरुषस्याज्ञा
टी॰ निनः स्तुतिर्यदि त्वसदृशीस्यात् अननुरूपा अयोग्यावाभवेत् तर्हि अस्मिन्विषये ब्रह्मादीना
२ मपि गिरस्त्वयवसन्नाभवेयुस्तन्निष्फलाभवेयुः ननस्मात्कारणात्केवलमस्माकमेवस्तुते
रनधिकारित्वं ब्रह्मादिरेवनथैव एनेनपूर्वार्द्धेनस्तुतेरनधिकारित्वमपरिपरिदंते उत्तरार्द्धेनसाधि

महिम्नः पारंतेपरमविदुषो यद्यसदृशी स्तुतिर्ब्रह्मादीनामपितद्वसन्नास्त्वयि
गिरः अथा वाच्यः सर्वः स्वमतिपरिणामावधिगृणन् ममाप्येषः स्तोत्रेहर
निरपवादः परिकरः ॥१॥

कारित्वं प्रतिपादयन्नाह किंकुर्वन् अथैवं ब्रूषेयत्सर्वः समस्तोपिजनः स्वमतिः परिणाम
वधिगृणन् स्वस्यमतिः स्वमतिः तस्यापरिणामः परिपाकः सएवावधिः सीमामर्यादाय
स्ययत्तनत्स्वमतिपरिणामावधियथाभवति एवन्वागृणन्वचसास्तुवन् अवाच्योउपलंभ
नीयो अनुग्राह्योभवतियद्येहंतर्हि हेहरप्रपन्नार्तिहरस्तोत्रेममाप्येषः परिकरः प्रारंभोनिरपवा शि॰
दोनिर्दोषएव ॥ इतिश्लोकार्थः ॥ १ ॥ १ ॥ सांबशिवायनमः ॥ १ ॥ २

म॰ हेभगवन्यतस्तवमहिमासवाङ्मनसयोः पंथानमतीतएवंवाकचमनसश्चवाङ्मनसेतयोः

टी॰ वाङ्मनसयोःएतेचकिलवाङ्मनसिशब्दोर्थैविषयणीनाभ्यांचविषयणीनाभ्यांचनतवमहि
३ मानंअवधारयितुंपरिज्ञातुंनशक्यतेनेनतवअन्यद्वारेणअनुमानेनशक्यंयतवमहिमानंमाहात्
३ म्यंश्रुतिरपिचकिंनयथाभवत्येवमभिधत्तेभीतभीतंयथास्यात्तेननिश्चयतःकथाननन्अतत्अत
द्रूपानहिसाक्षात्चाशैव्यावनिश्चअतव्यावृत्तिःतयाअतव्यावृत्यानेतिनेतीतिशब्दंनयत्यदं
अतीतःपंथानंतवमहिमावाङ्मनयोरतव्यावृत्यायंचकिनमभिधत्तेश्रुतिरपि।
सकस्यस्तोतव्यःकतिविधगुणःकस्यविषयःपदेत्ववोचीनेपततिनमनःकस्यनवचः२
इत्यतद्व्यासइत्थंभूतोमहिमाकस्यस्तोतव्यःअपितुनकस्यापित्यर्थःअपितुकतिविधगुण
स्तस्यभगवतःकियत्याःगुणाःतेपरिज्ञातुंनशक्यतेकस्यविषयःकस्यगोचरोभवेत्अपितुन
कस्यापीत्यर्थःएतेननिष्फलत्वेपेणस्तोतेरनधिकारित्वंप्रतिपादितंसकलेसावकाशित्वम
स्तोतिप्रतिपादयन्नाहतुपुनःअर्वाचीनेसृष्टिस्थितिप्रलयमुख्यतयापदेस्थानेकस्यमनोन शि॰
पततिवचोवाकस्यनप्रसरतिअपितुसर्वेषामितिमनोवचश्चप्रसरतीतिश्लोकार्थः॥२॥ ३

म॰ हे भगवन् असंख्ययाशास्त्रकर्तृत्वमनिपादयन्नाह अनन्तमन ओपपद परिहरंश्च स्तुवन्नाह हे
टी॰ भगवन् मम स्तकन्यानवस्तुष्टिर्भोस्तेव किंकुर्वन स्तवबाच बाचो गिरो निर्मितवतः स्रष्टवतः
४ कथंभूता वाचो मधुस्फीता मधुवत्स्फीताः कोमला माधुर्य्यगुणसंयुक्ताः सालंकारा इत्य
२ र्थः पुनः किंभूताः परममृतं परममममृतं स्वरूपास्तयोच्यते उपचाराद्वेदांतसिद्धांतनिष्ठाः एते

मधुस्फीतावाचः परमममृतंनिर्मितवतस्तवब्रह्मन्किंवागपिसुरगुरोर्विस्म
यपदं ममत्वेतां वाणीं गुणकथनपुण्येन भवतः पुनामीत्यर्थेस्मिन्पुरमथनबु
द्धिर्व्यवसिता ३

न किमुक्तं एवंविधाः स्वर्गापवर्गयोर्निष्ठायास्तुताबाचो गिरो निर्मितवतः त्व सुरगुरोरपि वाक्
बाणी किं विस्मयपदमाश्चर्यस्थानं भवति अपितु न भवतीत्यर्थः किं पुनरस्मदादेः अहो यद्येवं नर्हि
किमर्थं भक्तो भवतेः सत्यं तत्पुनः हे पुरमथन त्रिपुरदाहक अस्मिन् स्तुतिलक्षणे अर्थे मम बुद्धिर्निका
रणा व्यवसिता कृतोद्यमा इतीत्थं किं अहं भगवतो गुणकथनपुण्येन एतां वाणीमात्मीयां पुना शि॰
मि पवित्रीकरोमीति श्लोकार्थः ॥ ३ ॥ ॥ ॥ ॥ ४

म· आत्मनःस्तोतेःसावकाशित्वमभ्यभिचारित्वंप्रतिपाद्यइतिदर्शितोभगवतःसर्वकर्तृत्वंप्रतिके
टी· चिद्धिप्रतिपद्यंतेमीमांसकादयःतन्मतंनिराकरणायअवद्योभमाणोयंसपद्मःपरेणश्लोकेन
५ येणभगवतोनुषनाविन्याहहेभगवन्हेवरदत्तवैश्वर्यंयतद्ध्वंसविहितप्रमारोपितानाकासुतिस्रषुतनु
४ ष्ठुनःकथंभूतासुगुणभिन्नासुगुणाःसत्वरजस्तमांसितैर्भिन्नाःपृथक्भूतागुणभिन्नाःतासुकथं
भूतंतवैश्वर्यंयेजगदुदयरक्षाप्रलयकृत्जगतांत्रयाणांउदयउत्पत्तिःरक्षापालनंप्रलयोविनाश

तवैश्वर्यंयत्तज्जगदुदयरक्षाप्रलयकृत्त्रयीवस्तुव्यस्तंतिसृषुगुणभिन्नासुतनु
षु अभव्यानामस्मिन्वरदरमणीयामरमणींविहंतुंव्याक्रोशींविदधतइहैके
जडधियः॥४॥

स्वेतितान्करोतीतिपुनःकथंभूतंत्रयीवस्तुत्रयीवेदत्रयीअथवाब्रह्माविष्णुरुद्रात्मकस्वरू
पंहेभगवन्इहमर्त्यलोकेएकेजड़धियोःमंदमतयःपापीष्टामीमांसकादयःतवैश्वर्यंविहंतु
स्फोटयितुंनिराकर्तुंव्याक्रोशींनिंदांविदधतेकथंभूतांव्याक्रोशींअभव्यानांपापिष्टानांरमणीयां शि०
मनोरमान्पुनःकथंभूतांअस्मिन्सर्वज्ञादिगुणोपेतेतवैश्वर्येअरमणींविरूपमितिश्लोकार्थः।४। ५

इदानीं तामेव व्याक्रोशीं प्रगटयति किमीह इति निराकरण व्याक्रोशरहितो खलु निश्चितं धा
ताकर्त्ता त्रिभुवनं सृजति किमीहः का ईहा यस्य स किमीहः स धाता किमीहन् विश्वं सृजति त्रि
भुवनजनने का ईहा चेष्टा का परिस्पंदना क्रिया तया किं कायसन् त्रिभुवनं सृजति तथा हि वि
मुपायः स धाता किमुपायः सन् त्रिभुवनं सृजति त्रिभुवनजनने किमुपायः किं कायणं निमि
त्तमयमिति कुतर्कः कुत्सितो विचारः कांश्चित् हतधियो मंदमतीन् मुखरयति वाचालयति

किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं किमाधारो धाता सृजति किमुपा
दान इति च अनर्वैश्वर्ये त्वय्यनवसरदुस्थो हतधियः कुतर्कोऽयं कांश्चिन्मुखर
यति मोहाय जगतः ५

कस्मै प्रयोजनाय जगतो मोहाय अज्ञानाय लोकविप्रतारणाय नरकगमनाय कथंभूतः
कुतर्कः त्वयि विषये अनवसरदुस्थः अवसरोऽवकाशः नावसरोऽनवकाशस्तेन दुस्थः स्था
नमप्राप्य दुर्लंघ्य इत्यनवसरदुस्थः कथंभूते त्वयि अनर्वैश्वर्ये अचिंत्यमाहात्म्ये यतस्त्वं
इच्छया कुरुते देहमिच्छयानुनिवर्तते क्रीडते भगवल्लोके बालक्रीडनकैरिव इति श्लोकार्थः ५

म· हेब्रह्मन्नमीभूर्भुवःस्वर्महर्जनतपःसप्तलोकाः अवयववन्तोपिकिमजन्मानः एषांजन्मकिं
टी· नाविद्यतेयस्मात्सावयवंतज्जन्मयुक्तंयथाघटस्तथालोकाःसावयवाःसावयवत्वाज्जन्मव
७ न्तःएवहेभगवन्भवविधिःसृष्टिविधानंजगतामधिष्ठातारंचेतनंनिमित्तंकारणमीश्व
८ रंअनादरीकृत्यअनादृत्यभवतिअनपेक्ष्यभवतिकिंनैवंकर्तारमपेक्ष्यतेएवदिक्कालधर्मा
धर्मपरिमाणप्रभृतीनिचेतनाअन्यंततदचेतनाधिष्ठानानस्वीकृतंकार्योन्मुखानिभवन्तीनेश्व

अजन्मानोलोकाःकिमवयववन्तोपिजगता।मधिष्ठातारंकिं
भवविधिरनादृत्यभवति अनीशोवाकुर्याद्भुवनजननेकःपरि
करोयतोमंदास्त्वांप्रत्यमरवरसंशेरतइमे ॥ ६ ॥ ६ ॥ ६॥

यवाविधीयतेवायद्यनीशःकुर्यात्कांश्चित्कुर्यात्तथानस्यअनीशस्यभुवनजननेभु
वनोत्पादनविधौकःपरिकरःकासामग्रीहेअमरवरयतःकारणादिमेमंदाःपापिष्ठाः शि·
त्वांप्रतिसंशेरतेसंदेहंकुर्वन्तिसंशयंउत्पादयन्तित्वांप्रतिसंशयंसंदेहाकरास्पिनास्तीतिनास्त्यपर्यायः ७

त्रयीवेदविहितोमार्गः सांख्यंपंचविंशतितत्त्वोपलक्षणलक्षितं तथायोगः वैशेषिकशास्त्रं तथापशुपतिमतंमतशब्देनसिद्धांताः प्रकीर्तिताः सोमसिद्धांतशिवसिद्धांतपंचरात्रसिद्धांत इत्यादयः सिद्धांताः तथावैष्णवपंचरात्रनारदपंचरात्रयोर्ग्रहणं इतिपदसमाहारोभवतितेनएतत्पंचसंख्यापरिच्छिन्नंप्रस्थानमितितस्मिन्प्रस्थानेस्थितेसति प्रभिन्नेसतिपृथक्मार्गेस्थितेऽहंकारेणपे तानरुचिष्वायितः इतिप्रवृत्तेनोयदिदंतपरंत्वेतस्मात्परमपरपथ्यंसेव्यंग्राह्यंचतस्मात्सेवनीयो

त्रयीसांख्यंयोगःपशुपतिमतंवैष्णवमितिप्रभिन्नेप्रस्थानेपरमिदमदःपथ्य
मितिचरुचीनांवैचित्र्यादृजुकुटिलनानापथजुषांनृणामेकोगम्यस्त्वमसि।
पयसामर्णवइव ७

वैचित्र्याः यतउक्तं एकमेवपरंतत्त्वमभिभिन्नंपरमार्थतत्त्वेरुचिवैचित्र्यान्नामान्त्वंसमुपाग तेहेभगवन्ऋजुपथाऋजवःसरलाःकुटिलावक्रानानाकारायेपथामार्गास्तान्जुषंतीतिऋजुकुटिलनानापथजुषास्तेषामृजुकुटिलनानापथजुषांग्राजलवन्नानामार्गसेविनांपयसांयथार्णवएवगम्यप्राप्यएवंतथातृणामेकएवत्वंगम्योऽसिकइवअर्णवइवयथाऋजुकुटिलनानापथजुषांपयसामेकोऽर्णवोगम्योऽस्तितथात्वम पीत्यर्थः॥ इतिश्लोकार्थः॥ ७ ॥

म. हि वरद तव तंत्रोपकरणं मात्रापरिच्छेदगृहीतं इयत् किं महोक्षो महान् गरिष्ठः ककुद्मान् उक्षा वृ
टी. षभो महोक्षः खट्वाङ्गं प्रसिद्धमिति निश्चयं दण्डस्योपरि ब्रह्मकपालं खट्वाङ्ग उच्यते तथा परशुराय
९ युधविशेषः अजिनं गजचर्म तथा भस्म दग्धगोमयं तथा फणिनः काद्रवेया नागाः तथा कपा
१ लं च इति प्रसिद्धः समास्नैर्वर्तनेन इयत् परिमितं तव तंत्रोपकरणं धारणसामग्री तु पुनः सुरा देवाः
भवद्भ्रूप्रणिहितां भवद्भ्रूक्षेपैर्नीतां नामनर्वनीयामृद्धिं श्रियं दधति धारयन्ति अहो यद्येवं तर्हि

महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः कपालं चेतीयत्तव ब
रद तंत्रोपकरणं सुरास्तां तामृद्धिं बिदधति भवद्भ्रूप्रणिहितां नहि स्वा
त्मारामं बिषयमृगतृष्णा भ्रमयति ॥ ८ ॥

स्वयं कस्याप्यन्यो भुंक्ते नैवं वाच्यं हि यस्मात् कारणात् बिषयमृगतृष्णा बिषयरूपी मृगतृष्णा स्वा
त्मारामं स्वात्माराममात्मरूपं पुरुषं परमयोगिनं न भ्रमयति न चालयति न मोहामाया दयति शि.
एतेन भगवतः परमयोगित्वं प्रकटितमित्यर्थः ॥ इति श्लोकार्थः ॥ नमः शिवाय ॥ ९

म. हे भगवन् हे त्रिपुरमथन कश्चिन्नवदर्शनोनुयायी सर्वं समस्तं जगत् इदं ध्रुवं वदति अविनश्वरं गद
स. तिवक्ति तथा परे बौद्धभट्टाः क्षणभंगवादी सकलं जगदिदमध्रुवं क्षणिकं मन्यते परोन्यः क्षणक
१० वीनरागी सकलं समस्तं जगदिदं ध्रौव्याध्रौव्ये स्थैर्यास्थैर्ये गदति हे भगवन् समस्तेऽपि जगति व्यस्त
।. विषये एतत्कथनसंबंधे सति विस्मितप्रमाणभूतो सन्यासोऽहं ते बौद्धभट्टादिभिर्विस्मित इव वि
स्मयोत्पन्नो मोहं प्रापित इव त्वां स्तुवन् जिह्रेमि निर्लज्जे अहो यद्येवं न ह्रीः कथं। स्तौमि प्रवर्तने सत्यमिदं

ध्रुवं कश्चित्सर्वं सकलमपरस्त्वध्रुवमिदं परो ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये।
समस्तेप्येतस्मिन् पुरमथन तैर्विस्मित इव स्तुवन् जिह्रेमि त्वां न खलु ननु धृष्टा मुखरता
९ तवैश्वर्यं यत्नाद्यदुपरि विरंचिर्हरिरधः परिच्छेत्तुं यातावनलमनलस्कंधवपुषः॥ ॥

नन्वहो खलु निश्चयेन मुखरता वाचालता न धृष्टा अपि तु धृष्टैवेत्यर्थः ९ हे भगवन् विरंचिर्ब्रह्मा
उपरि उत्पतन् हरिः हरिः क्रोडोऽधः पतन् तवैश्वर्यं यत्नात् परिच्छेत्तुं परिकलयितुं अनलं यातौ अस
मर्थौ यातौ कथंभूतस्य तव अनलस्कंधवपुषः अनलस्कंधे तेजःपुंजे वपुः शरीरं यस्य तस्य एतेन विष्णु
कं वासुतलपर्यंतं लिंगस्य मस्तकं कालाग्निपर्यंतं लिंगस्य मूलं ब्रह्मा च ब्रह्मांडव्याप्तः विष्णुर्भ शि.
गवान् अप्यनलनिवासी कथमेतौ तवैश्वर्यपरिच्छेत्तुं समर्थौ स्यातामिति अपि तु न भगवन् ×× १०

म॰ इत्यर्थः ततोनंतरं तेन भगवता ताभ्यां ब्रह्मविष्णुभ्यां स्वयं तस्थे आत्मानमात्मनैव प्रकटयामा
टी॰ स किं कुर्वद्भ्यां भक्तिश्रद्धाभरगुरु यथा एवं गृणद्भ्यां हे गिरिश युक्तमेतत् यत्तस्तवानुवृत्तिः सेवा
११ किं न फलत्यपि फलत्येव फलजनका भवतीत्यर्थः॥ ॥१०॥ ॥ हे भगवन् यद्दशास्यो राव
॥ णो बाहून् अधत्त धृतवान् कथंभूतान् बाहून् रणकंडूपरवशान् संग्रामसंपयतन् अवैरिव्यति

ततो भक्तिश्रद्धाभरगुरु गृणद्भ्यां गिरिश यत् स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फ
लति १० अयत्नादासाद्य त्रिभुवनमवैरव्यतिकरं दशास्यो यद्बाहूनभृत रणकं
डूपरवशान् शिरःपद्मश्रेणीरचितचरणांभोरुहबलेः स्थिरायास्त्वद्भक्तेस्त्रिपुर
हरविस्फूर्जितमिदम् ॥११॥

करं न विद्यते वैरिणां व्यतिकरो व्यामिश्रणं यत्र तत् किं कृत्वा त्रिभुवनं यत्नादासाद्य प्राप्य हे त्रि
पुरहर इदं तत् स्थिरायास्त्वद्भक्तेः निश्चलायास्तव सेवाया विस्फूर्जितं विलसितं कथंभूताया
स्त्वद्भक्तेः शिरःपद्मश्रेणीरचितचरणांभोरुहबलेः शिरांस्येव पद्मानि तेषां श्रेणी पं
क्तिस्तया रचित आरोपितश्चरणांभोरुहाणां बलिः पूजोपहारो यस्याः सा तस्याः शिरःपद्म शि॰
श्रेणीरचितचरणांभोरुहबलेः॥ ११ ॥ ११ ॥ ११ ॥ ११ ॥ ११

म· हेभगवन्अमुष्यरावणस्यत्वदधिवसतौनवाधिष्ठानेपिवसतौकैलाशेपिविक्रमयतेविमंकु
टी· र्वतःपातालेपिप्रतिष्ठाअलभ्याआसीत्प्राप्याभवत्कस्मात्बलात्दर्पात्किंभूतंभुजवनत्वत्से
१२ वासमधिगतःप्राप्तःसारोबलंयत्तत्प्राप्तबलंक्वसतिअव्ययःलसत्चलितंनागुष्ठशिरसिसति
।१ मंदरिचलितंनागुष्ठाग्रेसतिअहोयुक्तमेतत्ध्रुवंनिश्चितंखलोदुर्जनउपचितोवर्द्धितंप्राप्तसन्
रमयालक्ष्म्याअलंकृतःसन्मुह्यतिमोहमुपगच्छतीतिश्लोकार्थः १२

अमुष्यत्वत्सेवासमधिगतसारंभुजबलं।बलात्कैलासेपित्वदधिव
सतौविक्रमयतः।अलभ्यापातालेप्यलसचलितांगुष्ठशिरसिप्रतिष्ठात्व
य्यासीद्ध्रुवमुपचितोमुह्यतिखलः १२ यदृद्धिंसुत्राम्णोवरदपरमोच्चैरपि
सतीमधश्चक्रेबाणःपरिजनविधेयस्त्रिभुवनः ॥

हेभगवन्हेवरदबाणेबाणासुरःसुत्राम्णोइंद्रस्यऋद्धिमधश्चक्रेकथंभूतांपरमोच्चैर
पिसतिंअन्यंतमहतीमपिहेभगवन्तस्मिन्बाणेनचित्रमाश्चर्यंकथंभूतोबाणःपरिज
नविधेयःत्रिभुवनःपरिजनवत्परिचारकवत्विधेयंत्रिभुवनंयेनसःएतद्व्याख्यानंसुंद शि·
चनस्मिन्कथंभूतेबाणेत्वच्चरणयोर्वरिवसनरि \\\ \\\ \\\ \\\ \\\ १२

म॰ प्रधानसेवके हेभगवन्युक्तमेनन्वयिपिरसोः शिरोनत्रनाकस्याप्युन्नत्येनभवतिअपितु
टी॰ सर्वेषामेवैश्वर्यायभवतीनिनान्वयार्थः ॥ २३ ॥ हेत्रिनयनकल्माषःकृष्णपांडुरोव
२३ र्णः विषंसंहृत्यवतस्तवकंठआसीत्सकल्माषस्तवकंठेश्रियंनकुरुतेअपितुकरोत्येवक
॥ थंभूतस्यतवअकांडब्रह्मांडक्षयचकितदेवासुरकृपाविधेयस्यअकांडेअप्रसंगेप्रस्तावे

नतच्चित्रंतस्मिन्वरिवसितरित्वच्चरणयोर्नकस्याप्युन्नत्यैर्भवतिशिर
स्त्वय्युपनतिः॥ २३ ॥ अकांडब्रह्मांडक्षयचकितदेवासुरकृपाविधे
यस्यासीद्यस्त्रिनयनविषंसंहृतवतः सकल्माषःकंठेनतनकुरुतेनश्रि
यमहो विकारोपिश्लाघ्योभुवनभयभंगव्यसनिनः॥ २४ २४ ॥

ब्रह्मांडक्षयेनचकितादेवासुरास्तेषुकृपाविधेयाकर्तव्यायेनसतस्यचअहोयुक्तमेतत्
भुवनभयभंगव्यसनिनः पुरुषविकारोऽप्यव्यापारोपिश्लाघ्यःस्तुत्यएवेत्यर्थः॥ २४॥ शि॰
भुवनभयभंगेनव्यसनंव्यापारंयस्ययास्मिन्वातस्यभुवनभयभंगव्यसनिनः॥ १३

म० हेभगवन्यस्यस्मरस्यविशिखावाणादेव्यसुरनरैः सहवर्तमानैर्देवासुरनरैर्जगति असिद्धा
टी० र्थाः अकृतप्रयोजनाः क्वचिदपिनैवनिवर्तन्तेसस्मरः कंदर्पः त्वामितरसुरसाधारणं यथाभव
१४ ति अन्यदन्यंयथाभवतितथापश्यन् स्मरणैर्नव्यात्मा ऽभूत् अस्मरणशरीरोवभूव अर्थात भस्म
१। सात्वभूवकथंभूताःवाणाः नित्यंजयिनः सदाजययुक्ताः अहोयुक्तमेतत् स्वाशिषु जितेंद्रि
येषुपरभवस्तिरस्कारो अनादरो ऽपथ्यः अभवतिनसुखदीत्यर्थः ॥ २१ ॥ हेभगवन्जगद्र

असिद्धार्थानैव क्वचिदपिसदेवासुरनरे। निवर्तन्तेनित्यंजगतिजयिनोयस्य
विशिखाः सपश्यन्नीशत्वामितरसुरसाधारणधिया। स्मरः स्मर्तव्यात्मा।
नहिवशिषुपथ्यः परिभवः २५ महीपादाघाताद्व्रजतिसहसासंशयपदम्। पदंविष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणं॥

क्षायैत्वं नटसित्वत्यं करोषिजगतां रक्षणाय रक्षाप्रनारणाय नटसि पुनः पृथ्वीपादाघाता
त्पादहेपात्सहसाशीघ्रंसंशयपदं व्रजतिगच्छति किंनुघनतिकिमधः प्रविशतिइतिसंशयप
दंतथाविष्णोः पदमाकाशंभ्राम्यत्भुजपरिघरुग्णग्रहगणंवर्तनेभ्राम्यतोयौभुजौतावेवपरिघौ शि
कुठारौताभ्यांरुग्णः पीडितोग्रहगणोनतत्रसक्षहोयेनननभ्राम्यंभुजप्रहारंतयाद्यौः स्वर्गोमुहु। १४

म· वारंवारं दौःस्थ्यं यांति दुःस्थां प्राप्नोति कथंभूता द्यौः अनिभृतजटाताडिततटा न अनिभृता चंचला
टी· या जटास्ताभिस्ताडितास्तटा यस्याः सा अनिभृतजटास्ताडिततटा ननु अहो उक्तक्रमेण ननु यतो वि॰
२५ भुता वामैव ननैव परीत्य विभुता २६ हे भगवन् यो वारां पानीयानां प्रवाहः स तेन तव शिरसि मस्तके
१७ पृषतलघुदृष्टः जलकणिकावच्छुद्रो दृष्टः कथंभूतं वियद्व्यापी व्योमप्रच्छादनशीलः पुनः ।

मुहुर्द्यौर्दौस्थ्यं यात्यनिभृतजटाताडिततटा । जगद्रक्षायै त्वं नटसि ननु
वामैव विभुता ॥ २६ वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः प्रवा
हो वारां यः पृषतलघुदृष्टः शिरसि ते । जगद्द्वीपाकारं जलधिवलयं
तेन कृतमि । त्यनेनैवोन्नेयं धृतमहिम दिव्यं तव वपुः ॥ १७ ॥

कथंभूतः तारागणगुणितफेनोद्गमरुचिः तारा नक्षत्राणि तेषां गणः समूहस्तेन गुणिता
उपमिता फेनोद्गमरुचिर्यस्य सः तेन जलसमूहेन जगद्द्वीपाकारं जगतो द्वीपानां प्रकाकारो
यत्र तत् जगद्द्वीपाकारं जलधिवलयं कृतं अनेनैव तव वपुर्ज्ञेयं कथंभूतं दिव्यं दिव्यप्रभासयु शि·
क्तं इत्यर्थः ॥ १७ ॥ १७ ॥ १७ ॥ १७ ॥ १७ ॥ १७ ॥ × २५

म० हेभगवन्नवत्रिपुरतृणंदिधक्षोअयंकःआडंबरविधिर्यंकासामग्रीरथःक्षोणी[illegible]यंतासा
टी० रथीशानधन्विर्ब्रह्माअगेंद्रःशैलराजोहिमवान्धनुःअथोनंतरंरथांगचक्रेचक्रस्थानेचंद्रा
१६ र्कौनयोःरथचरणपाणिर्विष्णुःशरइतिएकपक्षेद्वितीयपक्षेअहोयुक्तमेतत्[illegible]खलुनिश्व
14 येनप्रभुधियःस्वामिबुद्धयोविधेयैःपदात्यादिभिःसार्धंक्रीडंत्योनपरतंत्राःनपरायत्तास

रथक्षोणीयंताशतधृतिरगेंद्रोधनुरथो।रथांगेचंद्रार्कौरथचरणपाणिः
शरइतिदिधक्षोस्तेकोयंत्रिपुरतृणमाडंबरविधिर्विधेयैःक्रीडंत्योनखलुप
रतंत्राःप्रभुधियः१८ हरिस्तेसाहस्रंकमलबलिमादायपदयोर्यदेकोनेत
स्मिन्निजमुदहरन्नेत्रकमलं।गतोभक्त्युद्रेकःपरिणतिमसौचक्रवपुषा
त्रयाणांरक्षायैत्रिपुरहरजागर्तिजगतां१९

धीनाइत्यर्थःप्रभुर्यदिच्छतितत्करोतीतिनान्यथार्थः १८ व्याख्याहेभगवन्हरिःश्रीकृ
ष्णःतेनवपदयोःयत्सहस्रंकमलबलिमाधायरचयित्वातस्मिन्साहस्रेकमलबलावे शि०
कोनेसत्याआत्मीयंनिजंनेत्रकमलंउदहरत्तत्हारितवान्उत्पाटितवानित्यर्थःअसौभक्त्युद्रेकः १६
परिणतिंगतःसन्त्रयाणांजगतांरक्षायैजागर्तिसुरजिकेननवचक्रवपुषानवचक्रशरीरेणेत्यर्थः१९

भ· हेभगवन्जनोलोकःअतःकारणात्कर्मसुविषयेदृढपरिकरःदृढारंभोबभूवनेनेकिंकृत्वाचनेनो
टी· वेदश्रद्धांबध्वाआस्तिक्यबुद्धिंविधायपुनःकिंकृत्वाक्रतुषुयज्ञेषुफलदानप्रतिभुवंकर्मफ
२७ लदानसाक्षिणंत्वांसंप्रेक्ष्यसाक्षिणमवलोक्यक्रतौयत्तेसुप्तेसतिवाविनष्टेसतिपरिसमाप्ते
१८ सतिजायज्ञागरूकःक्रतुवतांफलयोगेयज्ञफलप्रदस्त्वमसीत्यर्थःफलसंबंधेत्वंजागृ
सित्वमेवसावधानोभवसिकेषांक्रतुमतांयागवाजिनांपुरुषाणांप्रध्वस्तंकर्मप्रनष्टंपरि

क्रतौसुप्तेजाग्रत्त्वमसिफलयोगेक्रतुमतांक्वकर्मप्रध्वस्तंफलतिपुरु
षाराधनमृतेअतस्त्वांसंप्रेक्ष्यक्रतुषुफलदानप्रतिभुवंक्रतौश्रद्धांब
ध्वादृढपरिकरःकर्मसुजनः २० क्रियादक्षोदक्षःक्रतुपतिरधीशस्तनुभृ
तामृषीणामार्त्विज्यंशरणदसदस्याःसुरगणाः ॥

समाप्तंकर्मपुरुषाराधनमृतेपुरुषाराधनंविनाक्वफलंनिश्चपिनफलतीत्यर्थः २० हेशरणद
दक्षःमुनिःक्रियायांकुशलःतथाक्रतुपतिरासीदित्यध्याहारःतनुभृतांजीवानामधीशःतथा
ऋषीणामार्त्विज्यंऋत्विग्भावःतथासुरगणादेवसमूहाःसदस्याःसभ्याःएवंसामग्रीकस्य शि·
दक्षस्यत्वत्तःसकाशात्क्रतुभ्रंशोऽभूत्यज्ञविनाशोबभूवकथंभूतात्त्वत्तः ॥ ॥ ॥ ॥ १७

म॰ फलविधानेयज्ञफलविधानेव्यसनविघ्नेयस्यसयस्मिन्वासमृप्सानहियस्मात्कारणात ।
टी॰ युक्तमेतत्ध्रुवंनिश्चितंमखायज्ञाःकर्त्तुयजमानस्यश्रद्धाविधुरंत्रश्रद्धाव्यभिचारणयभवं
१८ तिविपरीतार्थोयमभवंनि २१ हेनाथहेस्वामिन्नेनवमृगव्याधरभसः आखेटकोत्साहः अ
१८ मुंप्रजानाथंब्रह्माणमद्यापिनत्यजंतिकथंभूतंनस्यनवधनुष्पाणेः कथंभूतंप्रजानाथंप्रसभं

क्रतुभ्रंशस्तत्तःक्रतुफलविधानव्यसनिनोध्रुवंकर्त्तुःश्रद्धाविधुरमभि
चारायहिमखाः २१ प्रजानाथंनाथप्रसभमभिकंस्वांदुहितरं गतंरो
हिद्भूतंारिरमयिषुमृत्तस्यवपुषाःधनुष्पाणेर्यातंदिवमपिसपत्नाक्र
नममुं। त्रसंतंनेद्यापिन्यजतिनमृगव्याधरभसः ॥ २२ ॥ २२॥

बलात्कारेणरोहिद्भूतां हरिणीभूतांस्वांदुहितरं प्रतिक्रतस्यवपुषाम्रगशरीरेणगतंकिंक
र्तुमिछुःरिरमयिषुःरमयत्वमिछुःपुनःकथंभूतंअभिकंकामेनअभिभूतत्वात्कामकं अपरं शि॰
कथंभूतंसपत्नाकृतंबाणाभिघातव्यथितं अपरंकथंभूतं त्रसंतंदिवमपियातंयद्यपित्रसं १८
तंदिवमपिस्वर्गमपिगतंपुनस्तथापिगनेनवमृगव्याधरभसः अद्यापिप्रजानाथंनत्यजति २२

म. हेपुरमथनत्रिपुरदाहकतथापिदेवीपार्वतीत्वांस्त्रैणंस्त्रीलंपटमवैतिजानातिकिंकृत्वायद्य
टी. पिपुष्पायुधंकंदर्पंपुरोअग्रेअन्हायशीघ्रंरुटतिएवंतृणवत्प्लुष्टंदृष्ट्वादपिकिंभूतंकंदर्पंधृत
१९ धनुषंकस्मात्यमैर्नियमैर्निरतःआसक्तोयोसौदेहार्द्धस्तस्यपटघटनंसंपादयस्माद्यमनिरत
19 देहार्द्धघटनात्स्वलावण्याशंसास्वमात्मीयंलावण्यंसौंदर्यमानंशतीतिधारयंतीतिअभि

स्वलावण्याशंसाधृतधनुषमन्हायतृणवत्पुरःप्लुष्टंदृष्ट्वापुरमथन
पुष्पायुधमपियादेस्त्रैणंदेवीयमनिरतदेहार्धघटना।दवैतित्वामद्धा।
वनबरदमुग्धायुवतयः २३ श्मशानेष्वाक्रीडास्मरहरपिशाचाःसह।
चरा।श्चिताभस्मालेपःस्रगपिनृकरोटीपरिकरः॥

मन्यतेस्वस्वरूपाभिमानिनीअहोवतइतिखेदेअद्धासाक्षात्निश्चितंहेवरदयुवतयोमुग्धा
अज्ञानात्मूढाःस्त्रियः २३ हेस्मरहरतवश्मशानेष्वासमंताद्वनक्रीडापरिभ्रमणंतथापिशाचाः
सहचरानित्यंक्रीडाकारिणःतथाचिताभस्मालेपःचिताभस्मांगरागायस्यचिताभस्मालेपः
तथास्रगपिमालापिनृकरोटीपरिकरःनृकरोटीनरमुंडानांपरिकरःव्याप्तिमिश्रणंयत्रानाम।
इतिसंबोधनेहेवरदएवंपूर्वोक्तप्रकारेणअखिलंसमस्तंतवशीलममंगल्यंभवतुनिष्टतु शि. १९

म. पुनस्तथापित्वंस्मर्तॄणां/चिंतकानांत्वंपरममंगलमसि यतोभक्तिभावितचेतसा स्मर्यमाणो
टी. वहसि चाधिकारित्ववान्याप्यकीचभवहरत्वाच्चानंदरो किमपि वारिधिस्तत्प्रीणितानि वा नये
२० नजगति। २४। हेभगवन् यमिनो मनोन्तःकरणं चित्ते स्वस्मिन् सविधमविधाय समीपं कृ
त्वा शरीरं प्रत्यक्पश्चादिति मध्ये यानत्किमपि अनिर्वचनीयं यदालोक्य हृष्टा आल्हादमानंदं

अमंगल्यं शीलं तव भवतु नामैवमखिलं तथापि स्मर्तॄणां वरद परमं
मंगलमसि २४ मनः प्रत्यक्चित्ते सविधमविधायात्तमरुतः प्रहृष्य
द्रोमाणः प्रमदसलिलोत्संगितदृशः यदालोक्याल्हादं ह्रद इव निम
ज्ज्यामृतमये। दधत्यन्तस्तत्त्वं किमपि यमिनस्तत्किल भवान् २५

दधति धारयंति किलेति सत्येन तद्भवानेव तत्त्वं कथंभूता यमिनो योगिनः आत्तमरुतः आत्तो गृ
हीतो मरुद्वायुः प्राणो यैस्ते पुनः किंभूताः प्रहृष्यद्रोमाणः सरोमांचगात्राः अपरं किंभूताः
प्रमदसलिलोत्संगितदृशः प्रमदसलिलानि हर्षाश्रूणि तैरुत्संगिता परिप्लुता दृक् दृष्टिर्ये
षां ते उत्प्रेक्ष्यते अमृतमये ह्रदे निमज्ज्येव अवगाह्य आल्हादं धारयंति यथा कश्चिदपि केनापि दा शि०
हयुक्तः अमृतमये शीतले ह्रदे निमज्ज्य आल्हादं धारयतीत्यर्थः संगतः॥ २५॥ २५॥ २०

म॰ हेभगवन्त्वमर्कःसूर्यस्त्वंसोमश्चन्द्रस्त्वंपवनोवायुस्त्वंहुतवहोऽग्निस्त्वमापःपानीयन्त्वं
टी॰ व्योमआकाशस्त्वंउइतिश्चैवधारणेधरणिःपृथ्वीत्वंआत्मात्वमितिचइतिशब्दःसमाप्तौप्र
२१ वर्तन्तेपरिणताःपरिपक्वधियःत्वयिविषयेएवपूर्वोक्तप्रकारेणपरिछिन्नापरिछिन्नांयुक्तांगि
रंवाणींबिभ्रतिधारयन्तितुपुनःइहहिजगतिवयंनतत्त्वंनविद्मःनजानीमःयत्त्वंनभवसिय
त्किंचित्सदसत्सर्वंत्वंभवसिभगवद्व्यतिरिक्तंकिंचिदस्तीतिनात्पर्यार्थः ॥२६॥हेभगवन्

त्वमर्कस्त्वंसोमस्त्वमसिपवनस्त्वंहुतवहस्त्वमापस्त्वंव्योमत्वमु
धरणिरात्मात्वमितिचपरिछिन्नामेवंत्वयिपरिणताबिभ्रतुगिरंन।
विद्मस्तत्तत्त्वंवयमिहहियत्त्वंनभवसि २६ त्रयींतिस्रोवृत्तीस्त्रिभुवन
मथोत्रीनपिसुरानकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति ॥ × ॥

शरणदओमितिपदंगृणातिस्तौतिकथंभूतंओमितिपदंसमस्तंव्यस्तंसमस्तव्यापिकंकिंकु
र्वन्ओमितिपदंत्रयींतिस्रोवृत्तीश्चउदात्तानुदात्तस्वरितभेदात्केवलंतिस्रोवृत्तीस्त्रिभुवनंस्व
र्गंमर्त्यंपातालंचपुनःकिंकुर्वन्अकाराद्यैरकारोकारमकारैस्त्रिभिर्वर्णैस्त्रीनपिसुरान्ब्रह्मवि श्रि॰
ष्णुरुद्रानदधत्किंकुर्वाणओमितिपदंअणुभिर्ध्वनिभिस्तिनवतुरीयंधामश्चव ।।।।।।। २२

म· रुधाणस्त्रीकुर्वाणं किमुपेतयातुरीयं धामेति हृदयात्कंठयावत्स्वप्नावस्थायाव्याप्तिः कंठ
टी· तालुपर्यंतं स्वप्नावस्था या व्याप्तिः तालवादिललाटपर्यंतं सुषुप्तावस्थायाव्याप्तिः ललाटान्म
२२ कंठनीव्याप्य शिवतत्त्वपर्यंतं तुर्यावस्थायाव्याप्तिस्तथा निष्टेतयेतोयत्र अनाहतोत्पन्नतोनादो
॥ मुक्तिरपरिकीर्तितिः कथंभूतं तुरीयं धाम तीर्णविकृति तीर्णपरित्यक्ताविकृतायस्मात्तत्ति
वीकारमित्यर्थः ॥ २७ ॥ हे भगवन् यदिदं तवाभिधानाष्टकं अमुष्मिन् अभिधानाष्टके ष्क

तुरीयं ते धाम ध्वनिभिरवरुंधानमणुभिः समस्तं व्यस्तं त्वां शरणद गृणत्योमि
तिपदं ॥ २७ ॥ भवः सर्वो रुद्रः पशुपतिरथोग्रः सहमहांस्तथा भीमेशाना
विति यदभिधानाष्टकमिदं । अमुष्मिन् प्रत्येकं प्रविचरति देव श्रुतिरपि
प्रियायास्मैधाम्ने प्रणिहितनमस्योस्मि भवते ॥ २८ ॥ २८ ॥ २८ ॥

निर्वर: प्रत्येकं प्रविचरति तत् किम विधाष्टेनोक्तं भवः सर्वः रुद्रः पशुपतिः अर्थनंतरं उग्रः
महान् शब्देन महादेव उच्यते तथा भीमेशानौ अभिधानाष्टके अमुष्मिन् वेदोपि श्रुतिरपि
प्रविचरति प्रत्येकं विमर्षयै अस्मै धाम्ने प्रियायप्रीत्यर्थ एवं भगवन् एवंरूपाय भगवते तेतु
भ्यं प्रणिहित नमस्योस्मि प्रणिहिताकृतानमस्या नमस्कारो येन स तथाकृतनमस्कारो ऽ शि·
स्मीत्यर्थः नमस्कारोमि ॥ २८ ॥ ॥ हरिॐ नमः शिवाय: ॥ ॥ २८ ॥ २२

म· हे प्रियस्वरूनेतुभ्यंनेदिष्टायनिकटवर्त्तिनेनमः दविष्टायचनमः दूरस्थायनमः हेस्मर
टी· हरत्तेतुभ्यंक्षोदिष्टायनेतुभ्यंछुद्रूरूपायसूक्ष्मरूपायनमः तथामहिष्टायमहत्तमायगुरु
२२ नरायनमः हेत्रिनयननेतुभ्यंवर्षिष्टायवृद्धरूपायनमः तथाचयविष्टायबनरूपायतरु
णायनमः हेभगवन्नेतुभ्यंसर्बस्मैसर्बप्रकारायसर्बरूपायचमहादेवायनमः चशब्दः त

नमोनेदिष्टायप्रियस्वदविष्टायचनमो। नमःक्षोधिष्टायस्मरहरमहि
ष्टायचनमः नमोबर्षिष्टायत्रिनयनयविष्टायचनमो। नमस्सर्बस्मैतेत्त
दिदमितिसर्बायचनमः २९

दिदमितिसर्बायतुभ्यंनमः तत्परोक्षमिति अपरोक्षमित्यनेनप्रकारेणनिर्वाच्यसर्बय
त्रनैददमितिसर्बस्मैनमः क्वचित्तदिदमिति पाठस्तस्यजगतो अदोभक्तारणतदद मनि प्यस्मै
सर्बस्यतस्मै



शि·
२३

म॰ हेभगवनविश्वोत्पत्तौबहुलरजसेप्रचुररजसेरजोगुणाधिष्ठायभवायनमः ब्रह्मरूपाय
टी॰ तत्संहारेतस्यसंहारे प्रबलतमसेनमोगुणाधिष्ठायहरायनमोनमः जनसुखकृते जनसुख
२४ कारिणेसत्वोद्रेकमितिनिस्त्रैगुण्येगुणत्रयातीतायप्रमहसिपदे मुक्तिस्थानेशिवायसतोद्र
१८ कोसत्वस्वरूपेसत्वगुणाधिष्ठायमृडायविष्णुरूपायनमोनमः परमैश्वर्यैश्वणिमाद्यष्टगुणे
तिनमोनमः॥ ३०॥हेवरदभक्तिमामितिअमुनाप्रकारेणचकिंतभीतममंदीकृत्यमोत्सा

बहुलरजसेविश्वोत्पत्तौभवायनमोनमः प्रबलतमसेतत्संहारे ह
रायनमोनमः जनसुखकृतेसत्वोद्रिक्तौमृडायनमोनमः प्रमहसि
पदेनिस्त्रैगुण्येशिवायनमोनमः ३० कृशपरिणतिचेतः क्लेशव
श्यक्वचेदंक्वचतवगुणसीमोल्लंघनीशश्वदृद्धिः

घनेनवचरणयोर्भक्तिश्रमंदीकृत्यप्रौढाकृत्यवाक्यपुष्पोपहारं आधानवाक्याण्येवपुष्पा
णितेषामनुहारः प्रजानां प्रकल्पयन् चकितमितोनिकिंइदंमदीयंचेतः क्वक्वशश्वदविलं
घनीकृतऋद्धिः कथंभूतंचेतः क्लेशवश्यंकष्टसाध्यं अविद्या अस्मितारागद्वेषाभिनिवेशा शि॰
यंचक्लेशास्तेषांवश्यमधीनं अन्यस्मिन्नन्यथाज्ञान ॥ ॥ ॥ ॥ ॥ ॥ २४

म· मविद्याबुद्ध्यात्रस्तात्मनोरेकत्वाभावोनिरस्मीनासुखेविषयासक्तिः रागोऽसौदुःखेच्छाभीनिद्वे
टी· षः अनुनायासपिमारणादपित्रासाभिनिवेश इति पंचक्लेशाः कथंभूता त्वदृद्धिः गुणसीमो
२५ ल्लंघनी गुणत्रयातीता गुणानां सीमानमुल्लंघयन्तुमतिक्रांतुंशीलमस्येति सा कथंभूतेन च
८० कृशपरिणति परिणामदुर्बले हे वरद भक्तिर्मां ममंदीकृत्य प्रोत्साहनेन त्वच्चरणयोराधा
न धारयामास स कथंभूतं तं भामित्यमुनाप्रकारेण च किं न पुनः कथंभूतं मां वाक्यपुष्पोपहारं

इति चकितममंदीकृत्य मां भक्तिराधाद्वरद चरणयोस्ते वाक्यपुष्पोपहारं ३१

वाक्यपुष्पस निपाठवाक्यानि एतान्येव पुष्पाणि तान्येव उपहारो बलिर्यस्य तं इतीति
किं इदं मदीयं चेतः क्व च पुनः त्वदशाश्वतलंघिनी त्वदृद्धिः क्वा कथंभूतं चेतः क्लेशवश्यं कष्ट
साध्यं कथंभूता त्वदृद्धिः गुणसीमोल्लंघिनी गुणत्रयातीतं गुणानां सीमानमुल्लंघयितुमति
क्रांतंशीलमस्याः सा गुणसीमोल्लंघनी पुनः कथंभूतः चेतः कृशपरिणति कृशाऽल्पा कत शि
रापरिणतिः परिपक्वता यस्य तत् इति श्लोकार्थः ॥ ३१ ॥ हरिॐ नमः शिवाय ॥ ३२ ॥

अयंपुष्पदंतनामिधानोगंधर्वः इंदुमौलेश्चंद्रचूडामणेः श्रीमहादेवस्यरुचिरंमनोहरमेत
नस्तोत्रंस्तवमन्वयेनसंबंधेनालघुवृत्तैश्चकारकृतवान्‌कथंभूतस्येंदुमौलेरसुरसुरमुनींद्रै
रर्चितस्यपूजितस्यपुनःकथंभूतस्यग्रथितगुणमहिम्नः ग्रथितोरचितोमहिमामाहा

असुरसुरमुनींद्रैरर्चितस्येंदुमौलेर्ग्रथितगुणमहिम्नो
निर्गुणस्येश्वरस्यसकलगुणवरिष्ठःपुष्पदंताभि
धानोरुचिरमलघुवृत्तैःस्तोत्रमेतच्चकार ॥ ३२ ॥

त्म्यंयस्यसग्रथितगुणमहिमातस्यःपुनःकीदृशस्यनिर्गुणस्यगुणातीतस्यकथंभू शि
नःपुष्पदंतनामिधानोगुणवरिष्ठःसकलगुणनिधानः ॥ ३२ ॥ ॐनमःशिवाय ॥ २६

 हेभगवन् असितगिरिसमं कज्जलं अंजनं स्याच्चेत् सिंधुपात्रे सुरतरुवरशाखा लेखिनी स्या
त् यदि सारदा सरस्वती उर्वीपत्रं पृथ्वीपत्रं गृहीत्वा सर्वकालं सर्वदैवलिखति तदपि तव गुणानां



असितगिरिसमंस्यात्कज्जलं सिंधुपात्रे सुरतरुवरशाखा लेखनीप
त्रमुर्वी लिखति यदि गृहीत्वा सारदा सर्वकालं तदपि तव गुणानामीश
पारं नयाति ३३ अहरहरनवद्यं धूर्ज्जटेः स्तोत्रमेतत्पठति परमभक्त्या शुद्ध
चित्तः पुमान्यः स भवति शिवलोके रुद्रतुल्यः सदात्मा प्रचुरतरधनायुः
पुत्रवान्कीर्तिमांश्च ३४ दीक्षादानं तपस्तीर्थं होमयागादिकाः क्रियाः
महिम्नः स्तवपाठस्य कलां नार्हंति षोडशीं ३५ समाप्तोयं समस्तोत्रस
र्वमीश्वरवर्णनं। अनूपमं मनोहारी पुण्यं गंधर्वभाषितं ३६ महेशा।
॥ न्नापरो देवो महिम्नो नापरा स्तुतिः॥

तस्य गुणानां पारम् नयातीत्यर्थः ॥ ३३ ॥ सांबसदाशिवायनमः ॥ ३३ ॥ ॐ ॥ 

अघोरान्नापरोमन्त्रोनास्तितत्त्वंगुरोःपरं ३७ कुसुमदशननामासर्वगन्धर्वराजः श
शिधरवरमौलेर्देवदेवस्यदासः सगुरुनिजमहिम्नोभ्रष्टएवास्यरोषात्स्तवनमिद
मकार्षीद्दिव्यदिव्यंमहिम्नः ३८ सुरवरमुनिपूज्यंस्वर्गमोक्षैकहेतुंपठतियदिम
नुष्यःप्रांजलिर्नान्यचेताः व्रजतिशिवसमीपंकिन्नरैःस्तूयमानः स्तवनमिदममो
घंपुष्पदंतप्रणीतं ३९ श्रीपुष्पदंतमुखपंकजनिर्गतेनस्तोत्रेणकिल्बिष
हरेणहरप्रियेण ॥ कंठस्थितेनपठितेनसमाहितेनसुप्रीणितोभव
तिभूतपतिर्महेशः ४० इतिश्रीपुष्पदंताचार्य्यविरचितंमहि
म्नाख्यस्तोत्रंसटीकंसमाप्तं ॥ संवत् १९२९ भा· शु· ४
मतबअ महम्मदी में मिरज़ा महम्मद
खांके एहत्माममें छपी ॥
बकलम ...